मग्रे देवाश्चित्तिभिरुद्भरन्नेतद्ध्येषां तद्वा चित्तमासीत्तथैवै-नमयमेतच्चितिभिरुद्धरत्येतद्ध्यस्य तद्वा चित्तं भवति 'स नो भव शिवस्त्वꣳ सुप्प्रतीको विभावसुरि'ति यथैव यजुस्तथा बन्धुस्तं दक्षिणत ऽउदञ्चमादधाति तस्योक्तो बन्धुꣳ स्थाल्यां गार्हपत्यꣳ समुप्प्याऽपरमादधाति स यदि काम-येतोपाधिरोहेत्पाश्र्वतो वा व्रजेत् ॥ ७ ॥ अथाऽनड्वाहौ* युनक्ति । दक्षिणमग्रेऽथ सव्यमेवं देवत्रेतरथा मानुषे स यां काञ्च दिशं ख्यास्यन्त्स्यात्प्राङेवाऽग्रे प्प्रयायात्प्राची हि दिगग्नेꣳ स्वामेव तद्दिशमनु प्प्रयाति ॥ ८ ॥ 'प्रेदग्ने[2] ज्योतिष्माद्याहि । शिवेभिरर्चिभिष्ट्वमि'ति प्रेदग्ने त्वं ज्योतिष्मा-न्याहि शिवेभिरर्चिभिर्दीप्प्यमानैरित्येतद्द 'बृहद्भिर्भानु[3]-भिर्भासन्नमा हिꣳ सीस्तन्न्वा प्प्रजा' ऽइति बृहद्भिरर्चि-भिर्दीप्प्यमानैर्म्मा हिꣳसीरात्मना प्प्रजा ऽइत्त्येतत् ॥ ९ ॥ स यदाक्ष † ऽउत्सर्ज्जेत् । अथैतद्यजुर्ज्जपदेत्सुर्ख्या वा ऽएषा वाग्याऽक्षस्य तामेतच्छमयति तामेतद्देवत्रा करोति ॥ १० ॥ यद्वेवैतद्यजुर्ज्जपति । यस्मिन्न्वै कस्मिँश्चाऽऽहितेऽक्ष ऽउत्स-र्ज्जति तस्यैव सा वाग्भवति तद्यदग्नावाहितेऽक्ष ऽउत्सर्ज्ज-त्यग्नेरेव सा वाग्भवत्यग्निमेव तद्देवा ऽउपाऽस्तुवन्नुपाऽमहयँ-स्तथैवैनमयमेतदुपस्तौत्युपमहय'त्यक्रन्ददग्निस्तनयन्निव द्यौ-

(१) शु० मं० अ० १२ क० ३१ ।
* का० श्रौ० सू० १६. ६. १८ ।
(२) शु० मं० अ० १२ क० ३२ । (३) शु० मं० अ० १२ क० ३२ ।
† का० श्रौ० सू० १६. ६. २० ।
(४) शु० मं० अ० १२ क० ३३ ।

'रि'ति तस्योक्तो बन्धुः ॥११॥ स यदि पुरा * वसत्यै विमुञ्चेत । अनस्येवाऽग्निः स्यादथ यदा वसत्यै विमुञ्चेत प्रागन ऽउपस्थाप्योत्तरत ऽउद्धत्यावोक्षति यत्रैनमुपाऽवहरति तं दक्षिणत ऽउदञ्चमुपाऽवहरति तस्योक्तो बन्धुः ॥१२॥ अथाऽस्मिन्त्समिधमादधाति । एतद्वा ऽएनं देवा ऽईयिवाᳬसमुपरिष्टादन्नेनाऽप्रीणन्नेतया समिधा तथैवैनमयमेतदीयिवाᳬसमुपरिष्टादन्नेन प्रीणात्येतया समिधा ॥१३॥ 'प्र[1] प्रायमग्निर्भरतस्य शृण्वे' ऽइति । प्रजापतिर्वै भरतः स हीदᳪ सर्वं बिभर्त्ति 'वि[2] यत्सूर्यो न रोचते बृहद्भा' ऽइति वियत्सूर्य ऽइव रोचते बृहद्भा ऽइत्येत'दभि[3] यः पूरुं पृतनासु तस्थावि'ति पूरुर्ह नामाऽसुररक्षसमास तमग्निः पृतनास्वभितष्ठौ 'दीदाय[4] दैव्यो ऽअतिथिः शिवो न' ऽइति दीप्यमानो दैवोऽतिथिः शिवो न ऽइत्येतत्स्थितवत्या वसत्यै ह्येनं तत्स्थापयति ॥ १४ ॥ अथाऽतः सम्पदेव । समिधं प्रथमेनाऽऽदधात्युद्यच्छत्येकेन प्रयात्येकेनाऽक्षमेकेनाऽनुमन्त्रयते समिधमेव पञ्चमेनाऽऽदधाति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ १५ ॥ (A)

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ ८ ॥

---

* का० श्रौ० सू० १६. ६ २१ ।

( १ ) शु० सं० अ० १२ क० ३४ । ( २ ) शु० सं० अ० १२ क० ३४ । ( ३ ) शु० सं० अ० १२ क० ३४ । ( ४ ) शु० सं० अ० १२ क० ३४ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा- का० श० ६, ८, १. कठ० सं० १६. १०; मै० सं० ११, ७, १०; तै० सं० ४, २, ३ ।

[ भस्मापोऽभ्यवहरणम्, उपस्थानम्, द्विविधप्रायश्चित्तविधिश्च ]

अथाऽतोभस्मन ऽएवाऽभ्यवहरणस्य । देवा वाऽएतदग्रे भस्मोदवपँस्तेऽब्रुवन्न्यदि वा ऽइदमित्थमेव सदात्मानमभि संस्करिष्यामहे मर्त्याः कुणपा ऽअनपहतपाप्मानो भविष्यामो यद्यु परावप्स्यामो यदत्राऽऽग्नेयं बहिर्द्धा तदग्नेः करिष्याम ऽउप तज्जानीत यथेदं करवामेति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाऽव तदब्रुवँस्तदिच्छत यथेदं करवामेति ॥ १ ॥ ते चेतयमानाः । एतदपश्यन्नप ऽएवैनदभ्यवहरामापो वा ऽअस्य सर्वस्य प्रतिष्ठा तद्यत्राऽस्य सर्वस्य प्रतिष्ठा तदेनत्प्रतिष्ठाप्य यदत्राऽऽग्नेयं तदद्भ्योऽधि जनयिष्याम ऽइति * तदपोऽभ्यवाऽहरँस्तथैवैनदयमेतदपोऽभ्यवहरति ॥ २ ॥ ‘आपो देवीः । प्रतिगृभ्णीत भस्मैतत्स्योने कृणुद्ध्वः सुरभा ऽउ लोक’ ऽइति जग्धं वा ऽएतद्यातयाम भवति तदेतदाह स्वभिष्ठऽएनल्लोके कुरुद्ध्वमिति ‘तस्मै नमन्तां जनय’ ऽइत्यापो वै जनयोऽद्भ्यो हीदः सर्वं जायते ‘सुपत्नीरि’त्यग्निना वा ऽआपः सुपत्न्यो ‘मातेव पुत्रं बिभृताप्स्वेनदि’ति यथा माता पुत्रमुपस्थे बिभृयादेवमेनद्बिभृतेत्येतत् ॥ ३ ॥ ‘अप्स्वग्ने सधिष्टवे’ति । अप्स्वग्ने योनिष्टवेत्येत‘त्सौषधी-

* का० श्रौ० सू० १६. ६. २६ ।

( १ ) शु० सं० अ० १२ क० ३५ । ( २ ) शु० सं० अ० १२ क० ३५ । ( ३ ) शु० सं० अ० १२ क० ३५ । ( ४ ) शु० सं० अ० १२ क० ३५ । ( ५ ) शु० सं० अ० १२ क० ३६ ।

र्[1]नुरुद्ध्यस' ऽइत्त्योषधीर्ह्येषोऽनुरुद्ध्यते 'गर्ब्भे सञ्ज्ञायसे[2] पुनरि'ति गर्ब्भे ह्येष सञ्ज्ञायते पुन'र्ग्गर्ब्भो ऽअस्योषधीनां[3] गर्ब्भो व्वनस्प्पतीनाम्। गर्ब्भो व्विश्श्वस्य भूतस्याऽग्ने गर्ब्भोऽअपामसी'ति तदेनमस्य सर्व्वस्य गर्ब्भं करोति ॥ ४ ॥ * त्रिभिरब्भ्यवहरति। त्रिवृदग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनदेतदब्भ्यवहरत्त्येकेनाऽग्रेऽथ द्वाब्भ्यां द्वाब्भ्यां व्वाऽग्रेऽथैकेन द्विस्तु कृत्त्वोऽब्भ्यवहरति तद्यै द्विपादाः पशवस्तैरेवैनदेतदब्भ्यवहरति ॥ ५ ॥ अथाऽपाऽऽदत्ते। † तद्यदत्राऽग्नेयं तदेतदद्भ्योऽधि जनयत्त्यनयाऽनया वै भेषजं क्रियतेऽनयैवैनमेतत्त्सम्भरति 'प्रसद्य भस्मना[4] योनिमपश्च पृथिवीमग्न' ऽइति प्रसन्नो ह्येष भस्मना योनिमपश्च पृथिवीं च भवति 'सह्रसृज्ज्य मातृभिष्ट्वं[5] ज्योतिष्मान्पुनराऽसद' इति सङ्गत्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासदऽइत्त्येत'त्पुनरासद्य[6] सदनं पुनरूर्ज्जा सह रय्ये'त्त्येतेन मा सर्व्वेणाऽभिनिवर्त्तस्वेत्त्येतत् ॥ ६ ॥ चतुर्ब्भिरपाऽऽदत्ते। तद्यै चतुष्पादाः पशवस्तैरेवैनमेतत्त्सम्भरत्त्यथोऽअन्नं वै पशवोऽन्नेनैवैनमेतत्त्सम्भरति त्रिभिरब्भ्यवहरति तत्त्सप्त सप्तचितिकोऽग्निः सप्तर्त्तवः सम्वत्त्सरः संवत्त्सरोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावत्तद्भवति ॥७॥ अपाऽऽदाय

(१) शु० सं० अ० १२ क० ३६। (२) शु० सं० अ० १२ क० ३६। (३) शु० सं० अ० १२ क० ३७।

* का० श्रौ० सू० १६. ६. २७,२८।

† का० श्रौ० सू० १६. ६. २९।

(४) शु० सं० अ० १२ क० ३८। (५) शु० सं० अ० १२ क० ३८। (६) शु० सं० अ० १२ क० ३९–४१।

भस्मनः प्प्रत्येत्य । * उखायामोप्प्योपतिष्ठत ऽएतद्वा ऽएत-
दुयथायथं करोति यदग्निमपोऽभ्यवहरति तस्मा ऽएवैत-
न्निह्नुतेऽहिᳫसाया ऽआग्नेयीभ्यामग्नय ऽएवैतन्निह्नुते
बुद्धवतीभ्यां यथैवाऽस्यैतदग्निर्वचो निबोधेत् ॥ ८ ॥ 'बोधा[1]
मे ऽअस्य वचसो यविष्ठ्ये'ति । बोध मेऽस्य वचसो यवि-
ष्ठेत्त्येत'न्मᳫहिष्ठस्य[2] प्प्रभृतस्य स्वधाव' ऽइति भूयिष्ठस्य
प्प्रभृतस्य स्वधाव ऽइत्त्येत'त्पीयति त्वो ऽअनु[3] त्वो गृणा-
ती'ति पीयत्त्येकोऽन्न्वेको गृणाति 'वन्दारुष्टे[4] तन्वं वन्दे-
ऽअग्न' ऽइति वन्दिता तेऽहं तन्वं वन्देऽग्न ऽइत्त्येत'त्स[5] बोधि
सूरिर्म्मघवा वसुपते वसुदावन् । युयोद्ध्यस्मद् द्वेषाᳫसी'ति
यथैवाऽस्माद् द्वेषाᳫसि युयादेवमेतदाह द्वाभ्यामुप-
तिष्ठते गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ९ ॥
तानि नव भवन्ति। नव दिशो दिशोऽग्निर्न्नव प्प्राणाः प्प्राणा-
ऽअग्निरेर्यावानग्निरेर्यावत्त्यस्य मात्रा तावत्तद्भवति ॥ १० ॥
अथ प्प्रायश्चित्ती करोति। सर्वेभ्यो वा ऽएष ऽएतं
कामेभ्य ऽआधत्ते तद्यदेवाऽस्याऽत्र कामानां व्व्यवच्छि-
द्यतेऽग्नावपोऽभ्यवह्रियमाणे तदेवैतत्सन्तनोति सन्दधात्युभे
प्प्रायश्चित्ती करोति ये ऽएवाऽग्नावनुगते तस्योक्तो बन्धुः
॥ ११ ॥ तानि दश भवन्ति । दशाक्षरा विराड्विराडग्निर्दश

* का० श्रौ० सू० १६. ६. ३० ।

( १ ) शु० सं० अ० १२ क० ४२ । ( २ ) शु० सं० अ० १२ क० ४२ । ( ३ ) शु० सं० अ० १२ क० ४२ । ( ४ ) शु० सं० अ० १२ क० ४२ । ( ५ ) शु० सं० अ० १२ क० ४३ ।

दिशो दिशोऽग्निर्दिश प्राणाः प्राणा ऽअग्निरुर्वावानग्निरुर्वी वत्यस्य मात्रा तावत्तद्भवति ॥ १२ ॥ (B)

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमः प्रपाठकः ॥५॥ कण्डिकासंख्या ५३०॥

इत्यष्टमोऽध्यायः ॥ ७ ॥

उखासम्भरणं नाम षष्ठं * काण्डं समाप्तम् ॥ ६ ॥



(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ८. ८. १; कठ० सं० १६. १०; कपि० २५. १०; मै० सं० ११. ७.१; तै० सं० ४. २. ३।

* अस्मिन्काण्डे कण्डिका संख्या ५३०।